सामानाधिकरण्यं घटः पट इति अस्ति तु तदेक-त्वस्य । किंच

संख्यैकताविरुद्धत्वाद्द्विसंख्यैवान्य- संख्यया ।
एकं द्वाविति न ह्यस्ति सामानाधिकरण्यधीः ॥

यत्तु अनेकद्रव्यवृत्तित्वे सति गुणत्वात् संयोग-वदयावद्द्रव्यभाविनी द्वित्वादिसंख्या इति तन्नाना-त्वेऽनैकान्तिकम्, न हि सतोरेव घटपटयोस्तन्नानात्वं नश्यति न च तद्द्वित्वसंख्यैव त्रयाणां तदभावप्रसंगात् न च तदेकत्वाभावमात्रम् तुच्छस्यापि नानात्वापत्तेः ।

आपेक्षिकत्वाद् द्वित्वादेः प्रतियोग्यनवग्रहात् ।
बुभुत्सोपरमाच्चापि सत्या एवानवग्रहः ॥

अतश्चैतन्यस्यैवेन्द्रियद्वारा अर्थसन्निकर्ष एव तद्भावाभावानुविधानोपपत्तिः अन्यच्च अर्थस्य प्रका-शकं हि ज्ञानं भवताम् सर्वं च प्रकाशकं प्रकाश्यव-स्तुसन्निकृष्टमेव प्रकाशकं दृष्टं दीपप्रभादि अतस्त-दपि तथेति युक्तमाश्रयितुं व्योमवदमूर्तस्य न क्रियावत्त्वमिति चेत् केयममूर्तिर्नाम यद्विरहिणः

क्रियाऽयोगः, यदि पारिभाषिकी द्रव्यत्वे सति क्काचित्कतेति इष्यत एव सा चैतन्ये, न हि तत्सर्वगतं द्रव्यं तथा सति युगपत्सर्वार्थसिद्धिप्रसंगात् क्काचित्कत्वे तु तद्धि यदैकदैकेन्द्रियेण संप्रयुक्तं तदर्थाभिमुखं न तदेन्द्रियान्तरमधितिष्ठति, अत एव हि युगपज्ज्ञानानुत्पत्तिः निरतिशयवेगं च तत् युगपदिवातिशीघ्रमनेकेन्द्रियाधिष्ठानदर्शनात् अतो यथोदितममूर्तत्वं सिद्धम् स्पर्शवत्ता मूर्तिस्तद्विरहान्निष्क्रियत्वमिति चेत् शब्देनानेकान्तः. स खलु शङ्खमुखादेर्दवीयसोऽपि देशान्नोदनविशेषेण लोष्टादेरिव यावद्वेगं प्रतिष्ठते स्पर्शविहीनोऽपि स्पर्शरहितस्यापि मनइन्द्रियस्य क्रियावत्त्वं पदार्थवाक्यार्थविदामुभयेषामपि संमतमेव कथमतीतानागतयोरसतोश्चैतन्येन संप्रयोग इति चेत् कथं वा विषयभावः प्रकाशमानत्वं संख्यादियोगो वा तयोर्यस्तत्र निर्वाहः स एवात्रास्तु अपि चातीततयाऽऽनगततया च तावप्यद्यापि विद्येते इति तेन रूपेण बोधसन्निकर्षेकाऽनुपपत्तिः किंच यथा दवीयसि देशे सता ध्रुवशिंशुमारादिना दृक् सन्निकृष्यते तथा दवीयसि काले सता कल्पाद्यन्तवर्तिना

स्वयंभुवादिनेति नालोकं किंचित् । किंच ।

नातीतानागते बुद्धेर्दूरे भवितुमर्हतः ।
बुद्ध्या प्रकाशमानत्वाद्बुद्धिबोद्धस्वरूपवत् ॥

एवं च चैतन्यस्य निरतिशयवेगितया अन्तराल-देशकालाग्रहणाभिमानोऽलातचक्रगतक्रमवद् देशभे-दसंयोगविभागाग्रहणाभिमानवत् । अपि चेन्द्रिय-लिंगसंस्कारादेर्यदर्थप्रतिनियतं रूपं तेनैवोपश्लिष्य निःसरच्चैतन्यमपि तद्गोचरेणैव सन्निकृष्यते यथा गवादिपदशक्तिरेकबुद्धिसिद्धेऽपि सामान्यविशेषात्मके वस्तुनि सामान्यांशेनैव संबध्यते, यथा वा विधिः प्राप्तांशपरिहारेणाप्राप्तांशमेव भावनायाः स्पृशति, अत इन्द्रियादिद्वारेण चैतन्यमपि तदर्थाभिमुखं निर्गच्छ-तीति न्याय्यं, यथाऽऽह भगवान् तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि इति, मनुश्च ।

इन्द्रियाणां हि सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥

इति. यत्तु गुणश्चैतन्यगुणिनमपहाय कथम-न्यतोयातीति तदयुक्तम् । प्रहाणानभ्युपगमात् अप्र-

हायैवात्मानमितस्ततश्चेतना इन्द्रियादिद्वारान्निश्चरति विच्छिन्नायाश्च तस्याः संधानासंभवः शास्त्र एवोक्तः दृश्यन्ते च गुणा अपि शब्दगन्धसूर्यालोकरत्नप्रभादयो गतिमन्तो धर्म्यतिवर्तिनश्च अतिसूक्ष्मो दूरगमनधर्मा भौतिको हि शब्दः। ननु नभ इव विभुः शब्दः व्यंजकध्वनिवशेन प्रादेशिक इव गत्वर इव चोपलभ्यते तथा हि शब्दः सर्वव्यापी एकद्रव्यवर्तित्वे सत्याकाशगुणत्वात् तत्परिमाणवत्, मैवम् अतद्गुणत्वात् वायवीयः शब्दः तेन नियतसहोत्पत्तिकत्वात् तदीयस्पर्शवत् यश्च येन द्रव्येण नियतसहोत्पत्तिगुणः स तद्गुण एव यथा तथाविधा रूपादयः नियतसहोत्पत्तिश्च वायुना शब्दः उभयोरपि भेरीदण्डवंशदलनादिसंयोगविभागजत्वनियमात्, उत्पद्यते च शब्दः इन्द्रियग्राह्यत्वे सति गुणत्वाद् गन्धादिवत्, कृतकश्च क्रियोत्तरमेवोपलभ्यत्वात् संयोगादिवत् न चाभिव्यंजकत्वं प्रयत्नादेः कल्प्यं गौरवात् तत्प्रतीतिकारणत्वकल्पनादपि तत्कारणत्वकल्पनैव हि लघ्वी अभिव्यंजकाश्च एकदेशावस्थितानेकेन्द्रियग्राह्यान् युगपदभिव्यंजन्ति यथा प्रदीपो रूप-

संख्यापरिमाणानि करकादींश्चैकप्रदेशवर्तिनः, न चैवं ताल्वादिसंयोगविभागजनितपवन इति नासौ व्यंजकः ।

नित्यत्ववादिनः शब्दा निर्भागव्योमवर्तिनः ।
श्रावणाश्चेत्यभिव्यक्तिनियमे नास्ति कारणम् ॥
देशैक्ये ग्राहकैक्ये च व्यंजकैक्य हि दर्शितम् ।
तदभावात्प्रयत्नोत्थमारुतः कारणं ध्वनेः ॥
अत एव च नानात्वं प्रत्युच्चारणमिष्यताम् ।
कृतस्य करणायोगाद्धेतु - पौष्कल्यभेदतः ॥
किंचोदात्तानुदात्तत्वदीर्घत्व - ह्रस्वतादयः ।
गादिस्था युगपद्गांतो न भिन्द्युः स्वाश्रयान् कथम् ॥
स्थानैक्यायातसादृश्यात्प्रत्यभिज्ञाऽपि नैक्यतः ।
प्रदीपप्रत्यभिज्ञेव ज्ञापिता भेदहेतवः ॥

नन्वेवं चैतन्यसंयोगः संयोगजो वा कश्चित्प्रकाशः प्राप्तः उभयमपि तन्न चैतन्ये सम्भवति भेदापेक्षत्वात्संबन्धस्य, आत्मनोऽपि न चैतन्येन संयोगस्तद्धर्मित्वात्, न हि धर्मधर्मिणोः संबन्धः संयोगः समवायो हि सः अयुतसिद्धसंबन्धत्वात्

संयोगस्तु पृथक्सिद्धयोर्द्रव्ययोः क्रियानिमित्ता प्राप्तिः अकार्यकारणयोर्वा तयोर्निरन्तरस्थितिः चैत्.यसं-योगसमवाययोरन्यतरस्य संबन्धमात्रस्य वा प्रकाशत्वे ज्ञातृज्ञानज्ञेयशरीरेन्द्रियेष्वव्याप्त्यतिव्याप्ती, यथा-योगमादर्शयितव्ये तत्त्वान्तरप्रकाशाभ्युपगमस्त्वनुपल-ब्धिबाधितो न दूषणान्तरं प्रयोजयतिअतो ·यद्व्यव-हारोदयानुगुणं ज्ञानं तत्प्रकाशत इत्येवाभ्युपगमो युक्तः त्रितयव्यवहारानुगुण्यं संविदस्तु स्वभाव इत्य-पर्यनुयाज्यं निमित्तवैरूप्यम्, न हि स्वभावाः पर्यनु-योगमर्हन्ति एवं चेत्संयोगसमवायविरहिणोऽपि प-दार्थस्य निमित्तभेदानुसारेण व्यवहारहेतुः संविदिति युक्तमाश्रयितुम्, उच्यते उक्तमत्र न निमित्तकारण-मनुरुध्य कार्यं स्वकार्यमारभत इति व्यवहारानुगुण-संवेदनत्वेऽपि प्रकाशपदार्थे प्रवृत्तिनिवृत्तिभेदो दुष्परि-हर एव बहुव्रीहिसमासाश्रयणे संविदन्तराभावेन तस्यां तदभावप्रसंगात्, कर्मधारयाश्रयणे ज्ञातृज्ञेयया-रसंवेदनत्वेनाप्रकाशप्रसंगः। व्यवहारोदयानुगुण्यं च व्यवहारतोऽवगन्तव्यम् ततः प्रागेव च भवति विदि-तत्वप्रतीतिर्व्याहारश्च यद्येवं कस्तर्हि प्रकाशते—प-

दार्थः न हि निरवद्यमेकरूपं ज्ञातृज्ञेयज्ञानानुगतं तमुपलभामहे. उच्यते नूनं भवानश्रुतपूर्वी प्रथमाधिकरणस्य न्यायतत्त्वे अभिहितं हि तत्रेदम् अनुभवे स्मृतिमुपपादयद्भिरनुभवादूरत्वं स्मृतिनिमित्तमिति, एतदुक्तं भवति संविददूरत्वं प्रकाश इति आह किमिदमदूर इति दूरादन्यस्तद्विरुद्धस्तदभावो वा तथा विशेषणमुपलक्षणं वा अदूर इति विशेषणत्वे पक्षत्रयेऽपि नियमेन संवेदनदूरत्वानुसंधानपूर्विकया प्रकाश इति प्रतीत्या भवितव्यम् न च तथाऽस्ति उपलक्षणत्वे स्वरूपान्तरं वाच्यम्, न च तदवगम्यत इत्युक्तम् उच्यते अलमस्थाने संभ्रमेण ।

भवत्वनुभवादूरं दूरादन्यद्विरोधि वा ।
तदभावश्च प्रकाशत्वं किमत्र बहु जल्प्यते ॥

प्रकाशत इति प्रतिभासोऽपि बुद्धिविप्रकर्षप्रत्यनीकबोधतत्संसृष्टपदार्थस्वरूपविमर्श एव बाह्यप्रकाशवत् तत्रापि ह्यालोके तद्व्याप्तभूभागादौ च प्रकटादिप्रख्योपाख्ये आलोकादूरत्वनिमित्ते यथा च तत्र तन्निमित्ता सन्तमसनिवृत्तिरेवमिहापि ज्ञाना-

दूरत्वनिमित्ताज्ञाननिवृत्तिः, अत एव चानुभूते अनुभवे चोत्तरकालतुल्यवत्स्मरणम् एवं च चैतन्यसंबन्धविशेषविषयविकल्पोऽप्यलब्धावकाश इति निरनुयोज्यानुयोग एव, नैरन्तर्यपदपर्यायमत्यन्तसामीप्यमात्रं च संयोगः, स एव परतन्त्राश्रितः समवायपदपरिभाषाभूमिर्वैशेषिकाणामिति नार्थान्तरत्वमूरीकृत्य विकल्पः संभवति, यथा च संयोगान्तर्भावः समवायस्य तथा संबन्धविमर्शे दर्शयिष्यामः, ज्ञानादूरत्वप्रयुक्तो व्यवहारक्षमतालक्षणो वा परः प्रकाशः स च सत्यपि स्वनिमित्तपौष्कल्ये प्रतिबन्धाद् योग्यताविरहाद्वा व्यापित्वासंगित्वाद्यात्मधर्मान्तरेषु देहेन्द्रियादौ च न संजायते चक्षुःसन्निकृष्ट इव कालिन्दीपयसि रूपरसादयः, अतो यथोक्तनीत्या आत्मा स्वतश्चैतन्यविग्रहो हीनस्वभाव एवान्यत्करणैः प्रतिपद्यते । यत्तु सुखादिनिदर्शनेनात्मविशेषगुणतया चित्तेरागन्तुकत्वमापादितं तदपि गुणवृत्तापरिज्ञानेन यतः ।

स्वरूपोपाधयो धर्मा यावदाश्रयभाविनः ।
नैवं सुखादिबोधस्तु स्वरूपोपाधिरात्मनः ॥

यथा च बोधोपाधिरात्मभावस्तथोपपादितम्, सुखदुःखे चानात्मधर्मौ इन्द्रियसौष्ठवनाशयोरेव तद्भावोपपादनात्, व्याकरिष्यते चैतदन्तिमपदार्थसमर्थनावसर इति साधनविकलता च निदर्शनस्य, रागद्वेषादयोऽपि मनोऽवस्थाविशेषाः न साक्षादात्मगुणाः, विज्ञायते हि कामः संकल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव इति, गीयते च इच्छा द्वेषः सुखं दुःखम् इति चेतना धृतिः इति क्षेत्रलक्षणमैकपद्येन चेतनया ध्रियमाणः संघातो हि देहः स्ववृत्त्यनुगुणचैतन्यमात्रादेव प्रवर्तमानं क्षेत्रमिति यावत्, अत एव हि अन्तर्यामिब्राह्मणे यस्य पृथिवी शरीरम् यस्यापः शरीरं यस्यात्मा शरीरम् इत्यादि निर्देशः तानि सर्वाणि तद्वपुः इति च पुराणे किमिदं धीरिति उत्प्रेक्षाभिप्रायम् तन्न ज्ञप्तिविषयं तस्याः स्वाभाविकत्वस्य तस्यामेव श्रुतौ श्रूयमाणत्वात्, श्रूयते हि न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते इति, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् इति च ज्ञातुरविनाशित्वादेव ज्ञानस्याविनाशमुपपादयन्तीयं श्रुतिर्ज्ञातुः स्वरूपप्र-

युक्तं ज्ञानमिति दर्शयति, न च दृष्टिविशेषणतया द्रष्टुरुपादनमिति सांप्रतम् पुल्लिङ्गनिर्देशविरोधात् हेतोश्च साध्यसमत्वापत्तेः, द्रष्टुः स्वरूपनिर्देशपरत्वेऽपि दृष्टिपदस्यासमाधेयमहेतुत्वं स्वपक्षहानिश्च, आत्मनस्तु नित्यत्वमप्रचाल्यानेकन्यायागमसिद्धं युक्तं हेतुतया व्यपदेष्टुम्, न हि सति पदार्थे तत्स्वरूपोपाधयो न भवितुमर्हन्ति सति कनक इव पैङ्गल्यम् प्रभेव च प्रदीपे, तेनायमर्थः आत्मस्वभावभूतायाश्चितेर्वाह्याभ्यन्तरविषयविशेष- संबन्धप्रकारप्राप्तदृष्टि-घ्रातिरसयतिवक्तिश्रुतिमतिस्पृष्टि- विज्ञातिव्यपदेशभेदायाः स्वात्मावभासिन्याः संसारापवर्गावस्थयोर्न जातुचिद्विपरिलोपोविद्यत इति, स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः, तथा स्वेन भासा स्वेन ज्योतिषा आत्मज्योतिःसम्राडिति होवाच तथाऽपवर्गदशायामेव छन्दोगाः । न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् सर्वं ह पश्यः पश्यति नोपजनं स्मरन् इति च स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते । अन्याश्च

जानात्येवायं पुरुषो ज्ञातव्यं तु न वेद इत्याद्याः सकलकरणोपरमदशायामप्यात्मनः प्रबोधमभिदधानाः श्रुतयो बोधस्वभावतामस्य द्रढयन्ति निर्वाणमय एवाहमात्मा ज्ञानमयोऽमलः इत्यादि च पुराणे, ज्योतिषामपि तज्ज्योतिः इत्यादीतिहासे, भगवान् शौनकश्च ।

यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतः संभवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥

इति, अत एव हि सूत्रकारश्च ज्ञोऽत एव इति, तदेवमात्मस्वभावभूतस्य चैतन्यस्य विषयसंश्लेषविशेषेषु निश्चयसंशयादिव्यवहारभेदस्तत्तद्विशेषभाजि चैतन्ये वा चैतन्यस्य विषयेण दृढसंयोगो हि निश्चयः तस्यैव बहुभिर्युगपद् दृढसंयोगः संशयः ज्ञानवासनानुसारेण संश्लेषः स्मरणमित्यादिः, उक्तं च आत्म-

धर्मस्य चैतन्यस्य विषयेण संयोगो ज्ञानमित्युच्यते इति. न चैवं संयोगस्योभयाश्रितत्वेन विषयस्यापि ज्ञातृत्वप्रसङ्गः विषयेण संयोगाभावात्, चैतन्येन हि तस्य संयोगः बाह्यप्रकाशवत् यथा खल्वालोकसंबन्धेऽपि प्रकाशे सूर्यादेरेव प्रकाशकत्वं न घटादेः। अथ सूर्यादितन्त्रत्वादालोकस्य स एव तद्धर्मी तत्संबन्धेनार्थान्तरस्य प्रकाशः इत्युच्यते इहापि तर्हि चैतन्यस्यात्मधर्मत्वात्तेनार्थान्तरं स्पृशन् स एव जानातीत्युपपद्यते तत्सिद्धं चैतन्यस्वभाव एवायमात्मा आत्मानं विदन्नेवास्ते अन्यत्तु निमित्तभेदानुसारेण जानाति न जानाति चेति, तदेवं चैतन्यस्वभावः परिस्फुरन्नप्ययमात्मा गम्भीरजलाशयचरमीनवज्जल-संसृष्टक्षीरवच्च न विविच्य स्फुटं चकास्तीति तदुपपादनन्यायानुगताः पूर्वानुमानभेदा वचनानि चाद्रियन्ते तैरप्यपरितुष्यन्तो यमनियमादियोगांगानुष्ठानक्षपिताशुद्ध्यावरणमला निरोधाभ्यासपुटपाकनिर्धूतरजस्तमःकलंकसत्त्वोद्रेकसमुत्थस्वेतरसकलविषयवैलक्षण्यापरोक्षज्ञानाय प्रयतन्ते भावनाप्रकर्षपर्यन्ते चापरोक्षज्ञान-

मुदयत इति सर्ववादिनिर्विवादमिति न तदुपपादना-याद्य प्रयत्यते।

एवमात्मा स्वतःसिद्धयन्नागमेनानुमानतः।
योगाभ्यासभुवा स्पष्टं प्रत्यक्षेण प्रकाश्यते॥

अथास्य कालावच्छेदपरीक्षा तत्र सुगतमतानु-सारिणः सन्मात्रानुबन्धिनीं क्षणिकतामाचक्षाणा नि-त्यात्मदर्शनमेव सर्वानर्थमूलं मन्यमानाः क्षणभङ्गिन-मेनं संगिरन्ते, यत्सत्तत्क्षणिकं सँश्चायमात्मेति कथं पुनः सन्मात्रानुबन्धिनी क्षणिकता अक्षणिकस्य स-त्त्वानुपपत्तेः, यन्न कस्मैचित्कार्यायान्ततः सार्वज्ञ्य-विज्ञानगोचरत्वायापि न प्रभवति न तस्य सद्भावः संभाव्यत इत्यर्थक्रियाकारितैव सत्ता भावानाम्। न च सा स्वव्यापकभूतक्रमयौगपद्यविरहिण्यक्षणिके संभविनीत्यन्यत्र निरवकाशतया क्षणिकतयैवानुब ध्यते, कथं पुनः क्रमयौगपद्ययोरर्थक्रियाव्यापकत्वं कथं वा तयारक्षणिकान्निवृत्तिः श्रूयताम्।

अर्थक्रियासु भावानां कर्तृत्वस्य द्वयी गतिः।
क्रमेण युगपद्वाति न विधान्तरसंभवः॥

भावाभावबदनयोरन्यतरनिवृत्तावन्यतरव्यवस्था-
नादर्थक्रियाजनने भावानां न तृतीयप्रकारसंभव इति
क्रमाक्रमप्रतिबद्धैवार्थक्रिया न चाक्षणिके क्रमयौगपद्यं
संभवः ॥

*इति श्रीभगवद्यामुनमुनिविरचितसिद्धित्रये आत्मसिद्धिः ॥*



# ईश्वरसिद्धिरारभ्यते ।

तत्र कस्यचिदेकस्य वशे विश्वं प्रवर्तते ।
इति साधयितुं पूर्वं पूर्वपक्षं प्रचक्ष्महे ॥

तत्र मीमांसकाः प्राहुर्नायं सर्वार्थदर्शनशक्तिसंपन्नः पुरुषोऽभ्युपगममर्हति अतिपतितसकलसाधकप्रमाणसंभावनाभूमित्वात् स्फुटविविधबाधकत्वाच्च तथा हि अस्य प्रत्यक्षमन्यद्वा साधकं भवेत् प्रत्यक्षमपि लौकिकं यौगिकं वा ।

व्यवस्थितमितस्यार्थं न तावदिह लौकिकम् ।
साधनं तेन सर्वार्थतज्ज्ञानादेरसिद्धितः ॥

सर्वार्थदर्शनशक्तिशालिनमवगमयन्तो हि देशकालस्वभावविप्रकर्षव्यवधानजुषः सर्व एवार्थास्तद्दर्शनं शक्तिश्च गोचरयितव्यानि. न च विद्यमानेन्द्रियसन्निकर्षयोग्यकतिपयार्थविषयनियतवृत्तलौकिक-

प्रत्यक्षस्य निरवधिरयं महिमा संभावनाभूमिरिति कथमिव तदिह साधनमिति मन्येमहि, नापि योगिप्रत्यक्षमस्य साधकं यतः।

प्रत्यक्षत्वे तदप्येवं विद्यमानैकगोचरम्।
भूतादिगोचरं वा न प्रत्यक्षं प्रतिभादिवत्॥

तत्खलु योगिविज्ञानमैन्द्रियकं न वा ऐन्द्रियकमपि वहिरिन्द्रियसंभवमान्तरकरणजनितं वा वहिरिन्द्रियाणि तावत्समधिगतनिजविषयसन्निकर्ष- सहकारीणि तद्गोचरज्ञानजननानीति जगति विदितम्। अतो न रसनादिभिः रजतातिवृत्तव्यवहितादिसकलविषयवेदनप्रसङ्गः, न चाविद्यमाने रजतादिभिः संभवति सन्निकर्षः तस्य द्व्याश्रयत्वात् आश्रयाभावे तदसंभवात्, अतोऽपेक्षितोऽर्थसन्निकर्षः सहकारिविरहे कथमिन्द्रियाण्यतीतादिविषयसाक्षात्काराय कल्पेरन्, भवति च यद्यत्सहकारि यत्कार्यजननं तत्तदभावे न तज्जनयति . यथा क्षितिसलिलसहकार्यङ्कुरकार्यजननवीजं क्षित्याद्यभावेऽङ्कुरम् अर्थसन्निकर्षसहकारीणि वहिरिन्द्रियाणि ज्ञानजननानीति तान्यपि

नातीतेऽनागते वार्थे ज्ञानं जनयन्तीति न तदुपजनितं प्रत्यक्षं यथोक्तविषयनियममतिक्रामति. नाप्यान्तरकरणसंभवम् आन्तरगोचर एव सुखादौ स्वान्तस्वातन्त्र्यात्, बाह्यविषयमितिषु च मनसो निरंकुशकरणताङ्गीकारे हि कृतं चक्षुरादिभिः, अतश्च न कश्चिदन्धो बधिरो वा भवेत्, भवति चात्र विमतिपदं मनाबहिरिन्द्रियनिरपेक्षं न बाह्यप्रत्यक्षगोचरे प्रवर्तते तत्र तत्तन्त्रवृत्तित्वात् यद्यत्र यत्तन्त्रवृत्ति न तत्तन्निरपेक्षं तत्र प्रवर्तते यथाऽलोकापेक्षप्रवृत्ति चक्षुः स्वगोचरेऽन्धतमस इति, न च सिद्धौषधमन्त्रतपःसमाधिमहिमसमासादितातिशयानीन्द्रियाणि कदाचिदपजहति समधिगतविषयनियममिति संभवति, सांसिद्धिकसामर्थ्याविर्भावैकफलत्वात्तेषां सामर्थ्यस्य च प्रतिनियमात्, न खलु सुप्रयुक्तभेषजशतविहितसंस्कारमपि श्रोत्रं रूपरसविभागावगमाय कल्पते, भवति च विवादाध्यासितबाह्याभ्यन्तरकरण - पाटवातिशयोऽनुल्लङ्घितसीमा ऐन्द्रियकप्रकर्षत्वात् दृश्यमानतत्प्रकर्षवत् इत्यैन्द्रियकं ज्ञानं नातीतादि गोचरयति । भावनाप्रकर्षपर्यन्तजन्मनस्तु सत्यपि विशदनिर्भासित्वे प्रा-

च्यानुभवगोचरादनधिकमधिकं वाऽध्यवस्यतः स्मृतिविभ्रमस्रोतसोन्यतरावर्तपरिवर्तिनः कुतः प्रामाण्यकूलप्रतिलम्भः कुतस्तरां च प्रत्यक्षतयोत्तम्भनं प्रत्यक्षस्य वा सतः कथमिव विदितविषयनियमव्यतिक्रमोऽतिक्रमतो वा कुतः प्रत्यक्षत्वमिति न विश्वानुभवैश्वर्यशालिनि प्रत्यक्षं प्रमाणम् । नापि प्रमाणान्तरं तत्खल्वनुमानमागमो वा अनुमानमपि विशेषतोदृष्टं सामान्यतो दृष्टं वा तत्र सकलपदवीदवीयसि भगवति न तावत्स्वलक्षणसाक्षात्कारपूर्वकाविनाभावावधारणाधीनोदयत्वादिदमनुमानमुदेतुमलम् । न ह्यनवगतचरहुतभुजस्तदविनाभावितया धूममनुसंधातुमीशते, न च सर्वार्थनिर्माणसाक्षात्कारपटीयसि लिंगं सामान्यतोदृष्टमपि किंचन लभ्यते ।

नन्वेकचेतनाधीनं विवादाध्यासितं जगत् ।
अचेतनेनारब्धत्वादरोगस्य शरीरवत् ।
तथा सर्वार्थनिर्माणसाक्षात्करणकौशलम् ।
कार्यत्वादेव जगतस्तत्कर्तुरनुमीयताम् ॥

सर्वं हि कार्यमुपादानोपकरणसंप्रदानप्रयोजनसंवेदिचेतनरचितमवगतं घटमणिकगृहादिकार्यं च विमतिपदमवनिगिरिमहार्णवादीति तदपि तथाविधबुद्धिमद्धेतुकमध्यवसीयते, न च कार्यत्वमसिद्धमिति वाच्यम् अवयवसन्निवेशादिभिर्हेतुभिस्तत्सिद्धेः, इह चान्त्यावयविभ्यः प्रभृतिद्वयणुकमखिलमवयविक्रमनिहीयमाननानावयवव्यतिषङ्गविशेषजनितमवगतमित्यन्तत उपादानं चतुर्विधाः परमाणवः प्रपञ्चस्य तेषामादिपरिस्पन्दश्च तदनुगुणादृष्टविशिष्टतत्तत्क्षेत्रज्ञसंयोगासमवायिकारणक इति उपकरणमपि समस्तक्षेत्रज्ञवर्तीनि धर्माधर्मलक्षणान्यदृष्टानि प्रयोजनं पुनस्तदभिनिर्वर्तितविचित्रार्थक्रियाकारश्चेतनोपकारप्रकारभेदोऽपर्यन्तस्तदुपभुजस्त एव क्षेत्रज्ञाः संप्रदानम् । न चामी स्वसमवायिनावपि धर्माधर्मावलमवलोकयितुमिति तदतिरेकी निखिलभुवननिर्माणनिपुणोऽधिकरणसिद्धान्तसमधिगतनिरतिशयसहज- सकलविषयसंविदैश्वर्यशक्त्यतिशयः पुरुषधौरेयकः किमिति न सामान्यतोदृष्टलिङ्गादनुमीयते तदिदमविदितानुमानवृत्तस्य स्वमतिरचिततरलतर्कोल्लसितमिति परि-

हसन्ति मीमांसकाः । तथा हि किमिदमेकचेतनाधीनत्वं नामाभिप्रेतं तनुभुवनादेः, तदायत्तत्वमिति चेत् ।

किमस्य तस्मिन्नायत्तं किन्नु जन्माथ वा स्थितिः ।
प्रवृत्तिर्वा द्वयोस्तावत्साध्यहीनं निदर्शनम् ॥

न खलु शरीरमेकचेतनाधीनोत्पत्तिस्थिति, ये हि यद्देहाधीनसुखदुःखोपभोगभागिनः, भवति हि तदुतचादृष्टशालिनां सर्वेषामेव तेषां तद्देहिन इव तदुत्पत्तिस्थितिमित्तत्वम् । अपि च शरीरावयविनः स्वावयवसमवायलक्षणा स्थितिरवयवव्यतिषंगविशेषादृते न चेतयितारं परमपेक्षन्ते, या पुनस्तदपेक्षिणी प्राणनलक्षणा स्थितिः न सा पक्षीकृते क्षित्यादौ संभवतीति स्थितिमपि नैकरूपां पक्षसपक्षानुयायिनीमुदीक्षामहे, एकचेतनाधीनप्रवृत्तित्वे तु प्रबलबहुजनसरभसप्रयत्नप्रचाल्यैरुपलतरुरथादिभिर्व्यभिचारः आरब्धत्वादेव चैतत्साध्यसिद्धावधिक- मिदमुपादानविशेषवचनम् ।

चेतनाधीनतामात्रसाधने सिद्धसाध्यता।
चेतनैर्भोक्तृभिर्भाग्यः कर्मभिर्जन्यते हि नः॥

युक्तं चैतद्यदुभयवादिसिद्धानामेव चेतनानां कर्तृत्वाभ्युपगमो लाघवात्, न चोपादानाद्यनभिज्ञतया तत्प्रतिक्षेपः।

उपादानं पृथिव्यादियागदानादिसाधनम्।
साक्षात्कर्तुं क्षमन्ते यत्सर्व एव च चेतनाः॥

अथवदेव विश्वम्भरादयः क्रमप्राप्तागन्तुकोपचयापचयैकदेशशालिनो न युगपदेव निरवशेषविलयजननभागिन इत्यन्तिमपरमाणुसाक्षात्कारो न कर्तृभावोपयोगी।

कर्मणः शक्तिरूपं यदपूर्वादिपदास्पदम्।
मामूत्प्रत्यक्षता तस्य शक्तिमध्यक्षगोचरः॥

न खलु कुलालादयः कुम्भादिकार्यमारभमाणास्तदुपादानोपकरणभूतमृद्दण्डचक्रादि - कार्योत्पादनशक्तिं साक्षात्कृत्य तत्तदारभन्ते यदि परं शक्तिमवि-

ह्युपामभिलषितसाधने तदुपादानादिव्यवहारोऽनुपपन्नः, इह तु।

आगमादवगम्यन्ते विचित्राः कर्मशक्तयः।
तेन कर्मभिरात्मानः स*र्वं निर्ममतां पृथक्॥

अपि च तदेव चेतनकर्तृकं जगति परिदृश्यते यदेव शक्यक्रियं शक्यज्ञानापादानादि च, न तथा महीमहीधरमहार्णवादीति कथमिव तत्तत्कार्यत्वं, कथन्तरां च तदुपादानापकरणादेः साक्षात्कारगोचरता, यादृशं हि कार्यमुपादानाद्यभिज्ञपूर्वकमवगतं घटमणिकादि तादृशमेव हि तथाविधबुद्धिमद्धेतुकत्वानुमानाय प्रभवतीति। अपि चानीश्वरेण परिमितशक्तिज्ञानेन विग्रहवताऽनवाप्तकामेन कृतमवगतं घटादि कार्यमिति तथाविधं बोद्धारमुपस्थापयन् हेतुरभिमतपुरुषसार्वज्ञ्यसर्वैश्वर्यादिविपर्यय-साधनाद्विरुद्धः स्यात्, न चैवं सति सर्वानुमानव्यवहारोच्छेद-

* पृथक् कुर्वन्तु सर्वत इति पाठान्तरम्।

प्रसंगः शङ्कितव्यः, प्रमाणान्तरगोचरे हि लिंगिनि लिंगबलादापततो विपरीतविशेषाँस्तत्प्रमाणमेव प्रतिरुणद्धि इह पुनरतिपतितकलमानान्तरकर्मभावे सर्वनिर्माणनिपुणे सिषाधयिषिते यावन्तोऽन्वयव्यतिरेकावधारिताविनाभावभाजो धर्मास्तानप्यविशेषेणोपस्थापयति अपि च ।

स्वार्थकारुण्यभावेन व्याप्ताः प्रेक्षावतः क्रियाः ।
ईश्वरस्योभयाभावाज्जगत्सर्गो न युज्यते ॥

अवाप्तकामत्वान्न तावदात्मार्थे सृजति प्रलयसमये प्रलीनसकलकरणकलेवरादिभोगोपकरणतया च चेतनानां दुःखाभावात् दुःखिदर्शनजनितकृपाप्रयुक्तिरपि नास्तीति व्यापकभूतस्वार्थकारुण्यनिवृत्तेर्व्याप्यभूतया प्रेक्षावत्प्रवृत्त्यापि निवर्तितव्यम् ।

सुखैकतानं जनयेज्जगत्करुणया सृजन् ।
कृत्कर्मानुविधायित्वे हीयेतास्य स्वतन्त्रता ॥

न चोपादानादिकसाक्षात्कारिण एव कर्तृत्वमित्यपि नियमः उपादानमुपकरणं चाविदुप

एवात्मनो ज्ञानादिषु कर्तृत्वात्, अतः।

असिद्धत्वाद्विरुद्धत्वादनैकान्त्याच्च वर्णितात्।
कार्यत्वहेतोर्जगतो न यथोदितकर्तृता॥

प्रयोगश्च भवति महीमहीधरादि कार्यं न भवति प्रसिद्धकार्यविलक्षणत्वात् गगनवत् अशक्यदर्शनोपादानोपकरणत्वाद्वा व्यतिरेकेण घटादिवत्, परमाणवो न प्रत्यक्षाः निरतिशयसूक्ष्मद्रव्यत्वात् तथैव घटादिवत्, विमतिविषयः कालो न लोकशून्यः कालत्वात् इदानीन्तनकालवत्, तनुभुवनादि ईश्वरकर्तृकं न भवति कार्यत्वात्तद्वदेव, ईश्वरः कर्ता न भवति प्रयोजनरहितत्वादशरीरत्वाद्वा मुक्तात्मवदिति।

अत्र ब्रूमो न कार्यत्वं क्षित्यादौ शक्यनिन्हवम्।
सभागत्वात् क्रियावत्त्वान्महत्त्वेन विशेषितात्॥
तादृशादेव मूर्तत्वाद्बाह्यप्रत्यक्षताऽन्वितात्।
ससामान्यविशेषत्वाद्धित्यादिभ्यो - घटादिवत्॥

न चेदृश एव सन्निवेशः कार्यो नेतर इत्यवयवसन्निवेशविशेषप्रतिनियतं रूपभेदमुदीक्षामहे। यत्तु

शक्यक्रियं शक्यज्ञानोपादानोपकरणं च क्रियते इति तदस्तु नाम किं तु ते क्रियाज्ञानशक्ती क्रियाज्ञानाभ्यामेव समधिगमनीये, ते च क्षित्यादिषु यथोक्तसाधनबलसमुपस्था एते इति न विशेषः प्रसिद्धप्राकारगोपुरादिकार्येभ्यस्तनुभुवनादेः. न चैतावानेव क्रियागोचर इति विषयनियमः कश्चित् क्रियाया दृष्टः, येनेदमशक्यक्रियमध्यवस्येम, सिद्धं च कार्यत्वे तदुपादानादिसाक्षात्करणतदधिष्ठानतत्प्रेरणनिपुणः पुरुषविशेषः सिद्ध्यत्येव, अधिष्ठानं च तत्प्रवृत्त्यनुगुणसंकल्पवदीश्वरसन्निकर्षः क्षेत्रज्ञेनेव स्वशरीरादौ, स च द्रव्यैः संयोगलक्षणस्तद्गुणैस्तु संयुक्तसमवायरूपः, प्रवृत्तिश्च परमाणूनां परिस्पन्दलक्षणा, धर्माधर्मयोस्तु फलोदयानुकूलतादृशदेशकालादि - सहकारिसहितता, ताभ्यां धर्माधर्माभ्यामेव फलं चेतनानधिष्ठितानां सर्वेषामेतेषामचैतन्येनाकिंचित्करत्वात्, न हि चेतनेन वर्धकिनाऽनधिष्ठिता वासी देशकालादिसहकारिशतसमधिगमेऽपि यूपादीन्यापादयितुमलम् बीजांकुरादयस्तु पक्षान्तर्भूता इति तैर्व्यभिचारवचनमनभिज्ञतयैव श्रोत्रियाणाम्। एतेन सुखादिभिर्व्यभिचारोऽपि

प्रत्युक्तः न चोभयवादिसिद्धतामात्रेण क्षेत्रज्ञानामेवेह शाधिष्ठातृत्वकल्पनमुचितं तेषां सूक्ष्मव्यवहितादिदर्शनाशक्तेर्निश्चितत्वात् दृष्टानुसारिणी हि सर्वत्र कल्पना न दृष्टविरोधिनी, न चैवमीश्वरस्याशक्तिर्निश्चिता प्रमाणान्तरतस्तत्सिद्धेः, यथोदितप्रमाणबलेन सिद्ध्यन् सांसिद्धिकसर्वार्थदर्शनतत्प्रेरणशक्तिसंपन्न एव सिद्ध्यति कार्यत्वस्य समर्थकर्तृपूर्वकत्वेन प्रतिबन्धात्। यत्तु परिमितशक्तिज्ञानानैश्वर्याद्यापादना- द्धर्मविशेषविपरीतसाधनत्वमुद्भावितं तदतिस्थवीयः, अप्रयोजकत्वात्तेषां न हि किंचित्क्रियमाणं कर्तुरर्थान्तरविषयमसामर्थ्यं ज्ञानं वा स्वोत्पत्तयेऽपेक्षते स्वसंपादनसमर्थकर्तृमात्राक्षेपात् केवलव्यतिरेकासिद्धेः, तावतैवोपपद्यमाने कार्योदये संबन्धिनोऽकिंचित्करस्यार्थान्तरविषयस्याभावस्य हेतुत्वकल्पनानुपपत्तेः। अपि च किं तदितरसमस्तवस्तुविषयमज्ञानादिव्यापकमुत कतिपयगोचरमिति विवेचनीयं न तावदशेषविषयम् अनुपलब्धेः, न खलु कुम्भकारः कुम्भातिरेकि किमपि न विजानाति। अथ कतिपयविषयं, तदपि न अनियतविषयतया तस्यतस्य व्यभिचारदर्शनात् न चास्ति

किंचिद्व्यवस्थितं यदविद्यादिमानेव कर्तृतामनुभवति, न च शरीरिणैव कर्त्रा भाव्यम् शरीरग्रहणेनैवानैकान्त्यात्, न खलु शरीरविशिष्टः सन्नेवायमात्मा शरीरमुपादत्ते योगिनो युगपदनेकशरीरग्रहणायोगात् पूर्वदेहपरित्यागेन देहान्तरप्रापककर्मप्रेरितप्राणसहाय एव देहान्तरं प्रविशतीत्युपपादितमात्मचिन्तायाम्। किंचात्मनः शरीरमधितिष्ठतोऽधिष्ठानक्रियाकर्मभूतस्य देहस्याधिष्ठातृदेहानुप्रवेशोऽनुपपन्नः, युगपदेकक्रियायामेकस्य कर्मकर्तृत्वविरोधात्, अधितिष्ठासितदेहसंयोगवत एव तत्प्रवृत्त्यनुगुणप्रयत्नयोगलक्षणमधिष्ठानं दृष्टमिति चेत् अस्त्वेकतत्त्वसंबन्धस्याधिष्ठानानुपपत्तेः प्रेर्यवस्तुसंबन्धिना प्रेरकेण भवितव्यमिति न पुनर्देहसंबन्धेन भाव्यमिति कुतो निर्णयः, इत एव यतोऽन्यदप्यधिष्ठीयमानं मानदण्डादिस्वसंबन्धिनैवाधिष्ठीयते तेनाधिष्ठानक्रियापेक्षिताधिष्ठेयपदार्थसंबन्धमात्रातिरेकेण देहसंबन्धो नामापरो नादर्तव्यः। अस्ति चेश्वरस्यापि जगदुपादानोपकरणैः संबन्ध इत्युक्तमेव। अथ स्वदेहव्यतिरिक्ते वस्तुनि प्रवृत्तिविशेषकरत्वं देहद्वारेणैव, दृष्टं हि दण्डचक्रा-

दिषु करसंयोगादिना कुलालादेः प्रवर्तयितृत्वमित्यु-
च्येत तदपि न अभिध्यानमात्रेणैव परशरीरगतगर-
निरसनविसारणदर्शनात्, कथमसति शरीरे परप्रेरणा-
त्मकः संकल्प इति चेत्, किं शरीरं संकल्पयति येन
तदभावे न भवेत् करणमिति चेन्न मनस्करणत्वात्
किमस्तीश्वरस्य मनः, बाढम् । नन्वेवं विग्रहधर्मा-
धर्मानैश्वर्यादयः साधारणधर्मा प्रादुःष्युः मैवं कार्य-
त्वाक्षिप्तसमर्थकर्तृमत्त्वाद् द्रढिम्नैवापास्तत्वात् मनसो
नित्येन्द्रियतया देहापगमेऽपि संबन्धाभ्युपगमादनै-
कान्तिकश्च यावद्धि दृष्टान्तगुणं व्याप्त्युपयोगि ताव-
दनुज्ञायते, न चास्मदादेर्मनसाऽप्यचिन्त्यरचनस्या-
पर्यन्तविस्तारस्य महाभूतभौतिकप्रपञ्चस्य प्रादेशिक-
शरीरकः किंचिज्ज्ञः पुण्यपापपरवशगतिरलं निर्माणा-
येत्यपरिमितज्ञानैश्वर्यशक्तिः शरीराद्यनपेक्षः संकल्पा-
देव सकलभुवननिर्माणक्षमः कर्ता सिद्धः । ईदृशेन
कर्त्रा घटादिषु कार्यत्वस्य संबन्धो न दृष्ट इति चेत्
अतिगहनगिरितटाधिष्ठानेनातिप्रकृष्टादृष्टचरेन्धननि-
वहसंबन्धिना हुतवहविशेषेण महानसादौ धूमस्य वा
किं संबन्धो दृष्टः येन धूमविशेषदर्शनाद् गिरिशि-

खरे तथाविधाग्निरनुमीयते, यादृशो धूमो यत्रावगत-स्तत्रैव तादृशस्तत्संपादनसमर्थो दृष्टान्तभूमावपरिदृष्टोऽपि सामान्यव्याप्तिबलेन पक्षधर्मतावशात्सिध्यतीति चेत्, तदिदमस्माभिरभिधीयमानं किमिति न हृदयमधिरोहति भवताम्. इहापि कार्यत्वं समर्थकर्तृ-पूर्वकत्वेन घटादिषु विदितसंबन्धनियमं क्षित्यादिषु दृश्यमानं स्वसंपादनसमर्थमदृष्टपूर्वमेव बुद्धिमत्कर्तारमुपस्थापयति, यथैव हि देशकालेन्धनपरिमाणादि-विशेषानादरेण धूमस्य स्वोदयानुगुणहुतवहमात्रेण संबन्धनियमः तथैवानीश्वरत्वकिंचिज्ज्ञत्वशरीरित्व-पुण्यपापपरवशत्वमनुष्यत्वादिविशेषप्रहाणेन कार्यस्य स्वनिर्माणसमर्थबुद्धिमत्कर्तृमात्रेण संबन्धनियमनिश्चय इति न कश्चिद्विशेषः। अपि च विभुद्रव्य-संयोगिनः परिस्पन्दवतश्च सर्वत्र स्पर्शवत्त्वाव्यभिचारेऽपि ज्ञानसुखादिनित्यद्रव्यविशेषगुणानुमितात्मसंयोगिनो मनसः कथमिव स्पर्शरहितत्वं, कथं च वायवीयद्रव्यस्य महिमगुणशालिनो नियताधिष्ठान-स्पार्शनत्वनियमदर्शनेऽपि त्वगिन्द्रिये तद्विपर्ययः तैजसस्य वा रूपस्पर्शयोरन्यतरस्य वा ग्राहकत्वनियमे-

ऽपि रूपोपलम्भसाधनतानुमितनैजसभावस्य चक्षुषो निगमेन तदुभयानुद्भवाभ्युपगमः। अथ कार्यदर्शनानुमितसद्भावानां तैजसादिभावेऽपि तत्तद्विशेषाणां योग्यानुपलब्धिबाधितत्वात्* तदभ्युपगमेऽनेकनियमभङ्गप्रसङ्गाच्च तथाऽभ्युपगमः।

---

* तदभ्युपगमेऽनेकनियमदर्शनविघातप्रसङ्गाच्च. पक्षधर्मतावललभ्यार्थविशेषावबोधकानेकश्रुत्यादि मानवाधप्रसङ्गाच्च समर्थकर्तृपूर्वकत्वेन घटादिषु विदितसंबन्धनियमं कार्यत्वं क्षित्यादिषु दृश्यमानं सोत्पादनमदृष्टपूर्वमेव बुद्धिमत्कारमद्वितीयं पुरुषं धौरेयं साधयतीत्यभ्युपगन्तव्यम् तरतमभावापन्नवैचित्र्यवत्तत्तत्कार्येषु कार्यत्वमेव तत्तनुगुणं कर्तारमनुमापयति चेत् महीमहीधराधिरूपजगद्गतकार्यत्वमपि तदनुगुणकर्तारमनुमापयतीति कैमुत्यसिद्धेऽर्थे व्यर्थोऽयं निरीश्वरमीमांसकस्यात्र दुरभिनिवेशः, दृश्यन्ते ह्यस्मिन्नर्थेऽन्ये च हेतवः त्रैकालिकं कृत्स्नं जगत् तदनुगुणशक्त्यादिगुणगणवदायत्तस्थितिलयकमचिन्त्य- विविधविचित्ररचनत्वात् अतिकुशलैकायत्तस्थित्यादिकतयाप्रमितचित्रप्रतिमादिवत विभूतिपदाभिधेयं कृत्स्नमेएकाधेयविधेयशेषभावं तच्छरीरत्वात् मच्छरीरवत् इति क्वचित् पाठः।

हन्त तर्हि प्रकृतविषयेऽपि प्रसंजितधर्मविशेषाणामनपलम्भबाधाविशेषादनेकनियमदर्शन- विघातप्रसङ्गाच्च तथाभ्युपगम इति सर्वं समानमन्यत्राभिनिवेशात्, दृश्य ते हि नीतयः, तथा विवादास्पदं परमाण्वादिप्रेक्षावत्प्रेरितं चेष्टते अचेतनत्वात् यदचेतनं तत्तथा यथा तथाविधं कन्दुकादि तथा विवादाध्यामिता बाह्याभ्यन्तरप्रवृत्तयः प्रकृत्युपकरणप्रत्यक्षपूर्विकाः कार्यत्वात्तद्वदेव ।

प्रत्यक्षं तत्प्रमेयत्वात्पदार्थत्वाद्घटादिवत् ।
एकेच्छानुविधायीयमाचैतन्या - त्स्वदेहवत् ॥
एकेनाधिष्ठिताः कार्यं कुर्वते सर्वचेतनाः ।
देहसम्बन्धसापेक्षकार्यकृत्त्वात् त्वगादिवत् ॥
एकप्रधानपुरुषं विवादाध्यासितं जगत् ।
चैतनाचेतनात्मत्वा - देकराजकदेशवत् ॥

इति भगवद्यामुनमुनिविरचिते सिद्धित्रये ईश्वरसिद्धिः ।



# अथ संवित्सिद्धिरारभ्यते ।

एकमेवाद्वितीयं तद्ब्रह्मेत्युपनिषद्वचः ।
ब्रह्मणोऽन्यस्य सद्भावं ननु तत्प्रतिषेधति ॥
अत्र ब्रूमोऽद्वितीयोक्तौ समासः को विवक्षितः ।
किंस्वित्तत्पुरुषः किं वा बहुव्रीहिरथोच्यताम् ॥
पूर्वस्मिन्नुत्तरस्तावत्प्राधान्येन विवक्ष्यते ।
पदार्थस्तत्र तद्ब्रह्म ततोऽन्यत्सदृशं तु वा ॥
तद्विरुद्धमथो वा स्यात् त्रिष्वप्यन्यं न बाधते ।
अन्यत्वे सदृशत्वे वा द्वितीयं सिध्यति ध्रुवम् ॥
विरुद्धत्वे द्वितीयेन तृतीयं प्रथमं तु वा ।
ब्रह्म प्राप्नोति यस्मात्तद् द्वितीयेन विरुध्यते ॥
अतः सप्रथमाः सर्वे तृतीयाद्यार्थराशयः ।
द्वितीयेन तथा स्पृष्ट्वा स्वस्थास्तिष्ठन्त्यबाधिताः ॥
ननु नञ् ब्रह्मणोऽन्यस्य सर्वस्यैव निषेधकम् ।
द्वितीयग्रहणं यस्मात्सर्वस्यैवोपलक्षणम् ॥

नैवं निषेधो न ह्यस्माद् द्वितीयस्याऽवगम्यते ।
ततोऽन्यत्तद्विरुद्धं वा सदृशं वाऽत्र वक्ति सः ॥
द्वितीयं यस्य नैवास्ति तद्ब्रह्मेति विवक्षिते ।
सत्यादिलक्षणोक्तीनामपलक्षणता भवेत् ॥
अद्वितीये द्वितीयार्थनास्तितामात्र - गोचरे ।
स्वनिष्ठत्वान्नञर्थस्य न स्याद्ब्रह्मपदान्वयः ॥
द्वितीयशून्यता तत्र ब्रह्मणो न विशेषणम् ।
विशेषणे वा तद्ब्रह्म तृतीयं प्रथमं तु वा ॥
प्रसक्तं पूर्ववत्सर्वं बहुव्रीहौ समस्यति ।
ब्रह्मणः प्रथमा ये च तृतीयाद्या जगत्त्रये ॥
ब्रह्म प्रत्यद्वितीयत्वात्स्वस्थास्तिष्टन्त्यबाधिताः ।
किंच तत्र बहुव्रीहौ समासे संश्रिते सति ॥
वत्यर्थस्य नञर्थस्य न पदार्थान्तरान्वयः ।
सत्यार्थान्तरसंबन्धे षष्ठी यस्येति युज्यते ॥
द्वितीयवस्तुनास्तित्वं न ब्रह्म न विशेषणम् ।
असत्त्वान्न ह्यसद्ब्रह्म भवेन्नापि विशेषणम् ॥
तस्मात्प्रपञ्चसद्भावो नाद्वैतश्रुतिबाधितः ।
स्वप्रमाणबलात्सिद्धः श्रुत्या चाप्यनुमोदितः ॥
तेनाद्वितीयं ब्रह्मेति श्रुतेरर्थोऽयमुच्यते ।

द्वितीयगणनायोग्यो नासीदस्ति भविष्यति ॥
समो वाऽभ्यधिको वाऽस्य यो द्वितीयस्तु गण्यते ।
यतोऽस्य विभवव्यूहकलामात्रमिदं जगत् ॥
द्वितीयवागास्पदतां प्रतिपद्येत तत्कथम् ।
यथा चोलनृपः सम्राड्द्वितीयोऽद्य भूतले ॥
इति तत्तुल्यनृपतिनिवारणपरं वचः ।
न तु तद्भृत्यतत्पुत्रकलत्रादिनिषेधकम् ॥
तथा सुरासुरनरब्रह्मब्रह्माण्डकोटयः ।
क्लेशकर्मविपाकाद्यैरस्पृष्टस्या - खिलेशितुः ॥
ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः ।
विष्णार्विभूतिमहिमसमुद्रद्रप्स - विप्लुषः ॥
कः खल्वंगुलिभंगेन समुद्रान् सप्तसंख्यया ।
गणयन् गणयेदूर्मिफेनबुद्बुदविप्लुषः ॥
यथैक एव सविता न द्वितीयो नभःस्थले ।
इत्युक्त्या न हि सावित्रा निषिध्यन्तेऽत्र रश्मयः ॥
यथा प्रधानसंख्येय संख्यायां नैव गण्यते ।
संख्या पृथक् सतो तत्र संख्येयान्यपदार्थवत् ॥
तथा, पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि ।
इति ब्रुवंजगत्सर्वमित्थंभावे न्यवेशयत् ।

तथा,

एतावानस्य महिमा ततोज्यायस्तरो हि सः ॥
यत्रान्यन्न विजानाति सभूमोदरमन्तरम् ।
कुरुतेऽस्य भयं व्यक्तमित्यादिश्रुतयः पराः ॥
मेरोरिवाणुर्यस्येदं ब्रह्माण्डमखिलं जगत् ॥
इत्यादिकाः समस्तस्य तदित्थंभावतापराः ॥
वाचाऽऽरणमात्रं तु जगत्स्थावरजङ्गमम् ।
विकारजातं कूटस्थं मूलकारणमेव सत् ॥
अनन्यत्कारणात्कार्यं पावकाद्विस्फुलिंगवत् ।
मृत्तिकालोहवीजादिनाना - दृष्टान्तविस्तरैः ॥
नाशकद्दग्धुमनलस्तृणं मज्जयितुं जलम् ।
न वायुश्चलितुं शक्तस्तच्छक्त्याप्यायनादृते ॥
एकप्रधानविज्ञानाद्विज्ञातमखिलं भवेत् ।
इत्यादिवेदवचनतन्मूलाप्त - गमैरपि ॥
ब्रह्मात्मनात्मलाभोऽयं प्रपञ्चश्चिदचिन्मयः ।
इति प्रमीयते ब्राह्मी विभूतिर्न निषिध्यते ॥
तन्निषेधे समस्तस्य मिथ्यात्वाल्लोकवेदयोः ।
व्यवहारास्तु लुप्येरँस्तथास्यात्ब्रह्मधीरपि ॥
व्यावहारिकसत्यत्वान्मृषात्वेऽप्य - विरुद्धता ।

प्रत्यक्षादेरिति मतं प्रागेव समदूदुपम् ॥
अतश्चोपनिपज्ज्ञातब्रह्माद्वैतधिया जगत् ।
न बाध्यते विभूतित्वाद्ब्रह्मणश्चेत्यवस्थितम् ॥
ननु सत्त्वे प्रपंचस्य नास्तीति प्रत्ययः कथम् ।
असत्त्वे वा कथं तस्मिन्नस्तीति प्रत्ययो भवेत् ॥
सदसत्त्वं तथैकस्य विरुद्धत्वादसंभवि ।
सदसत्प्रत्ययप्राप्त - विरुद्धद्वन्द्वसंगमे ॥
तयोरन्यतरार्थस्य निश्चयाभावहेतुतः ।
सदसत्त्वं प्रपंचस्य जैनास्तु प्रतिजानते ॥
सत्त्वप्राप्तिं पुरस्कृत्य नास्तीति प्रत्ययोदयात् ।
सदा सत्त्वं प्रपंचस्य सांख्यास्तु प्रतिपेदिरे ॥
सदसत्प्रत्ययप्राप्तविरुद्धद्वन्द्व - संकटे ।
विरोधपरिहारार्थं सत्त्वासत्त्वांशभङ्गतः ॥
सदसद्भ्यामनिर्वाच्यं प्रपंचं केचिदूचिरे ।
सत्त्वासत्त्वे विभागेन देशकालादिभेदतः ॥
घटादेरिति मन्वाना व्यवस्थामपरे जगुः ।
तदेवंवादिसंमर्दात्संशये समुपस्थिते ॥
निर्णयः क्रियते तत्र मीमांसकमतेन तु ।
घटस्वरूपे नास्तित्वमस्तित्वं यद्यबूबुधत् ॥

स्यादेव युगपत्सत्त्वमसत्त्वं च घटादिषु ।
इदानीमिदमत्रास्ति नास्तीत्येवंविधा यतः ॥
देशकालदशाभेदादस्ति नास्तीति नो धियः ।
अतोदेशादिभेदेन सदसत्त्वं घटादिषु ॥
व्यवस्थितं निरस्तत्वाद्बाधस्येह न संभवः ।
ननु देशादिसंबन्धः सत एवोपपद्यते ॥
न देशकालसंबन्धादसतः सत्त्वमिष्यते ।
संबन्धोव्याश्रयस्तस्मात्सतः सत्त्वं सदा भवेत् ॥
असतः कारकैः सत्त्वं जन्मनेत्यतिदुर्घटम् ।
आद्यन्तवान् प्रपंचोऽतः सत्कक्ष्यान्तर्निवेक्ष्यते ॥
उक्तं च,
आदावन्ते च यन्नास्ति नास्ति मध्येऽपि तत्तथा ।
अतोनिश्चितसद्भावः सदा सन्नभ्युपेयताम् ॥
असतः सर्वदा सत्त्वं जन्यायोगात्खपुष्पवत् ।
असत्त्वे न विशेषोऽस्ति प्रागत्यन्तासतोरिह ॥
श्वेतकेतुमुपादाय तत्त्वमित्यपि यच्छ्रुतम् ।
षष्ठप्रपाठके तस्य कुतो मुख्यार्थसंभवः ॥
कार्पण्यशोकदुःखार्तश्चेतनस्त्वं - पदोदितः ।
सर्वज्ञः सत्यसंकल्पो निःसीमासुखसागरः ॥

तत्पदार्थस्तयोरैक्यं तेजस्तिमिरवत्कथम् ।
त्वमर्थस्थे तटस्थेवा + + +
गुणे तत्त्वंपदश्रुत्योरैकार्थ्यं दूरवारितम् ॥
अज्ञत्वसर्ववेदित्वदुःखित्व - सुखितादिके ।
विशेषणे वा चिद्धातोरथवा ऽप्युपलक्षणे ॥
विरुद्धगुणसंक्रान्तेर्भेदः स्यात्त्वं तदर्थयोः ।
वाच्यैकदेशभंगेन चिदेकव्यक्तिनिष्ठता ॥
साऽयं गौरितिवत्तत्त्वंपदयोरित्यपेशलम् ।
देशकालदशभेदादेकस्मिन्नपि धर्मिणि ॥
विरुद्धद्वन्द्वसंक्रान्तेः सोऽयं गौरिति युज्यते ॥
स्वप्रकाशस्य चिद्धातोर्विरुद्धद्वंद्वसंगतौ ॥
न व्यवस्थापकं किंचिद्देशकालदशादिके ।
निधूतनिखिलद्वंद्वस्वप्रकाशे चिदात्मनि ॥
द्वैतानर्थभ्रमाभावाच्छास्त्रं निर्विषयं भवेत् ।
एतेन सत्यकामत्वं जगत्कारणतादयः ॥
× × × शोकमोहादयः पुनः ।
अविद्योपाधिके जीवे विनाशेनेति यन्मतम् ।
क्षुद्रब्रह्मविदामेतन्मतं प्रागेव दूषितम् ॥
चित्स्वरूपे विशिष्टे वा मायाविद्याद्युपाधयः ।

पूर्वस्मिन् सर्वसांकर्यं परजीवाविभागतः ॥
उत्तरस्मिन्नपि तथा विशिष्टमपि चिद्यदि ।
चित्स्वरूपं हि निर्भेदं मायाऽविद्याद्युपाधिभिः ॥
विभिन्नमिव विभ्रान्तं — — —
तटस्था व्यस्थिता धर्माः स्वरूपं न स्पृशन्ति किम् ।
न हि दण्डिशिरश्छेदाद्दं वदत्तो न हिंसितः ॥
अचिदंशव्यपोहेन चिदेकपरिशेषता ।
अतस्तत्त्वमसीत्यादेरर्थ इत्यप्यसुन्दरम् ॥
अब्रह्मात्मताभावे प्रत्यक्चित्परिशिष्यते ।
तत्त्वंपदद्वयं जीवपरतादात्म्यगोचरम् ॥
तन्मुख्यवृत्तितादात्म्ययमपि वस्तुद्वयाश्रयम् ।
भेदाभेदविकल्पस्तु यस्त्वया परिचोदितः ॥
अभेदाभेदिनोऽसत्ये बन्धे सति निरर्थकः ।
अभेदो भेदमर्दीति स्वाश्रयीभूतवस्तुनोः ॥
भेदः परस्परानात्म्य भावानामेवमेतयोः ।
स्वरूपमभ्युपेत्यैव भेदाभेदविकल्पयोः ॥
— — तेन वाक् बाधाविरोधेन निगृह्यसे ।
भिन्नाभिन्नत्वसंबन्धसदसत्व - विकल्पनम् ॥
प्रत्यक्षानुभवापास्तं केवलं कण्ठशोषणम् ।

नीले नीलमतिर्यद्वदुत्पले नीलधीर्हि सा ॥
नीलमुत्पलमेवेदमिति साक्षाच्चकास्ति नः।
यथा विदितसंयोगसंबन्धेऽप्यक्षगोचरे ॥
भेदाभेदादिदुस्तर्क - विकल्पाधान - विभ्रमः।
तद्वत्तादात्म्यसम्बन्धे श्रुतिप्रत्यक्षमूलके ॥
श्रुतिदण्डेन दुस्तर्कविकल्पभ्रमवारणम्।
निर्दोषाऽपौरुषेयी च श्रुतिरत्यर्थमादरात् ॥
असकृत्तत्त्वमित्याह तादात्म्यं ब्रह्मजीवयोः।
ब्रह्मानन्दं हृदान्तस्थो मुक्तात्मा सुखमेधते।
फले च फलिनोऽभावान्मोक्षस्यापुरुषार्थता ॥
एकशेषे हि चिद्धातोः कस्य मोक्षः फलं भवेत्।
किंच प्रपञ्चरूपेण का नु संविद्विवर्तते ॥
न तावद्घटधीस्तस्यामसत्यामपि दर्शनात्।
न हि तस्यामजातायां नष्टायां वा खिलं जगत् ॥
नास्तीति शक्यते वक्तुं मुक्तौ प्रत्यक्षबाधनात्।
नाप्यन्यसंवित्तन्नाशेऽप्यन्येषामुप - लम्भनात् ॥
ननु संविदभिन्नैका न तस्यामस्ति भेदधीः।
घटादयोऽपि भिद्यन्ते न तु सा चित्प्रकाशनात् ॥
घटधीः पटसंवित्तिसमये नावभाति चेत्।

नैवं घटो हि नाभाति सा स्फुरत्येव तु स्फुटम् ॥
घटव्यावृत्तसंवित्तिरथ न स्फुरतीति चेत् ।
तद्व्यावृत्तपदेनापि किं सैवोक्ताथवेतरत् ॥
सैव चेद्भासतेऽन्यच्चेन्न ब्रूमस्तस्य भासनम् ।
किंचास्याः स्वप्रकाशया नीरूपाया न हि स्वतः ॥
ऋते विषयनानात्वान्नानात्वावग्रहभ्रमः ।
न वस्तु वस्तुधर्मो वा न प्रत्यक्षो न लैङ्गिकः ॥
घटादिवेद्यभेदोऽपि केवलं भ्रमलक्षणः ।
यदा तदा तदायत्तोधीभेदावग्रहोदयः ॥
कुतः कुतस्तरां तस्य परमार्थत्वसंभवः ।
किंच स्वयंप्रकाशस्य स्वतो वा परतोऽपि वा ॥
प्रागभावादिसिद्धिः स्यात्स्वतस्तावन्न युज्यते ।
स्वस्मिन् सति विरुद्धत्वादभावस्यानवस्थितेः ॥
स्वनिमित्तप्रकाशस्य स्वस्याभावेऽप्यसंभवात् ।
अनन्यगोचरत्वेन चितो न परतोऽपि च ॥
किंच वेद्यस्य भेदादेर्न चिद्धर्मत्वसंभवः ।
रूपादिवदतः संविदद्वितीया स्वयंप्रभा ॥
अतस्तद्भेदमाश्रित्य यद्विकल्पादि जल्पितम् ॥
तदविद्याविलासोऽयमिति ब्रह्मविदो विदुः ।

हन्त ब्रह्मोपदेशोऽयं श्रद्दधानेषु शोभते।
वयमश्रद्दधानाः स्मो ये युक्तिं प्रार्थयामहे॥
प्रति प्रमातृविषयं परस्परविलक्षणाः।
अपरोक्षं प्रकाशन्ते सुखदुःखादिवद्धियः॥
संबन्धिव्यङ्ग्यभेदस्य संयोगेच्छादिकस्य नः।
न हि भेदः स्वतो नास्ति नाप्रत्यक्षश्च संमतः॥
यदि सर्वगता नित्या संविदेवाभ्युपेयते।
ततः सर्वं सदा भायान्न वा किंचित्कदाचन॥
तदानीं न हि वेद्यस्य सन्निधीतरकारिता।
व्यवस्था घटते वित्त्योर्भवद्भिर्भवाश्रयात्॥
नापिकारणभेदेन नित्यायास्तदभावतः।
न च स्वरूपनात्वात्तदेकत्वपरिग्रहात्॥
ततश्च बधिरान्धादेः शब्दादिग्रहणं भवेत्।
गुरुशिष्यादिभेदश्च निर्निमित्तः प्रसज्यते॥
ननु नः संविदो भिन्नं सर्वं नाम न किंचन।
अतः सर्वं सदा भावादित्यकाण्डे न युज्यते।
इदमाख्याविभोः किं नु नीलादिर्न प्रकाशते॥
प्रकाशमानो नीलादिः संविदो वा न भिद्यते।
आदौ प्रतीतिसुभगो निर्वाहो लोकवेदयोः॥

यतः पदपदार्थादि न किंचिदवभासते ।
द्वितीये संविदो द्वैतं व्याहन्येत समीहितम् ॥
यद्ययं विविधाकारप्रपञ्चः संविदात्मकः ।
सापि संवित्तदात्मेति यतो नाना प्रसज्यते ॥
न चाविद्याविलासत्वाद् भेदाभेदानिरूपणात् ।
सा हि न्यायानलस्पृष्टाजातुपाभरणायते ॥
तथा हि यद्यविद्येयं विद्याऽभावात्मिकेष्यते ।
निरुपाख्यस्वभावत्वात्सा न किंचिन्नियच्छति ॥
अर्थान्तरमविद्या चेत्साध्वी भेदानिरूपणा ।
अर्थानर्थान्तरत्वादिविकल्पोऽस्या न युज्यते ॥
विद्यातोऽर्थान्तरं चासाविति सुव्याहृतं वचः ।
अथार्थान्तरभावोऽपि तस्यास्ते भ्रान्तिकल्पितः ॥
हन्तैवं सत्यविद्यैव विद्या स्यात्परमार्थतः ।
किंच शुद्धा जड़ा संविदविद्येयं तु नेदृशी ॥
तत्केन हेतुना सेयमन्यैव न निरूप्यते ।
अपि चेयमविद्या तं यदभावादिरूपिणी ॥
सा विद्या किन्तु संवित्तिर्वेद्यं वा वेदिताऽथ वा ।
वेद्यत्वे वेदितृत्वे च नास्यास्ताभ्यां निवर्तनम् ।
न हि ज्ञानादृतेऽज्ञानमन्यतस्ते निवर्तते ॥

संविदेवेति चेत्तस्या ननु भावादसम्भवः।
किंचेयं तद्विरुद्धा वा न तस्याः क्वापि सम्भवः॥
यतोऽखिलं जगद्व्याप्तं विद्ययैवाद्वितीयया।
अभावोऽन्यो विरुद्धो वा संविदोऽपि यदीष्यते॥
तदानीं संविदद्वैतप्रतिज्ञां दूरतस्त्यज।
किं चासौ कस्य जीवस्य को जीवो यस्य सेति चेत्॥
नन्वेवमसमाधानमन्योन्याश्रयणं भवेत्।
न ते जीवादविद्या स्यान्न च जीवस्तया विना॥
न बीजांकुरतुल्यत्वं जीवोत्पत्तेरयोगतः।
ब्रह्मणश्चेन्न सर्वज्ञं कथं तद्भ्रमभ्रमोति ते॥
अविद्याकृतदेहात्मप्रत्ययाधीनता न ते।
ब्रह्मसर्वज्ञभावस्य तत्स्वाभाविकताश्रुतेः॥
भेदावभासगर्भत्वादथ सर्वज्ञता मृषा।
तत एवामृषा कस्मान्न स्याच्छब्दान्तरादिवत्॥
यथा शब्दान्तराभ्याससंख्याद्याः शास्त्रभेदकाः।
भेदावभासगर्भाश्च यथार्थास्तादृशी न किम्॥
सर्वज्ञे नित्यमुक्तेऽपि यद्यज्ञानस्य संभवः।
तेजसीव तमस्तस्मान्न निवर्तेत केनचित्॥
सर्वज्ञत्वादिवचनप्रामाण्यं व्यावहारिकम्।

तात्त्विकं तु प्रमाणत्वमद्वैतवचसामिति।
नियामकं न पश्यामो निर्बन्धात्तावकादृते।
आश्रयप्रतियोगित्वे परस्परविरोधिनी॥
कथं वैकरसं ब्रह्म सदिति प्रतिपद्यते।
प्रत्यक्त्वेनाश्रयो ब्रह्मरूपेण प्रतियोगि चेत्॥
रूपभेदः कुतस्त्योऽयं यद्यविद्याप्रसादजः।
ननु सापि तदायत्तेत्यन्योन्याश्रयणं पुनः॥
अवस्तुत्वादविद्यायाः — — —
वस्तुनोदूपणत्वेन त्वया क्वेदन्निरक्षितम्॥
* उत्कारादोषोऽन्योन्यसमाश्रयः।
न वस्तुत्वादवस्तुत्वादित्ययो नेदमुत्तरम्॥
किंचाविद्या न चेद्य — — —
— — पुष्पादिव्यवहारवदीक्ष्यते।
नाप्यवस्त्विति चो — — —
— — समस्तेन नञा वस्त्विति चेत् —
समस्तेन नञा वस्तु प्रथमं यन्निषिध्यते।
प्रतिप्रसोतव्यस्तेन पुनस्तदिति वस्तुता॥

* नष्टं पाठान्तरं मन्ये।

अतो न वस्तुना — — —
न कश्चकास्तीति विनश्चियां*स्मजातुचित् ।
किंच प्रपंचनिर्वाहजननी येयमाश्रिता ॥
अविद्या सा किमेकैव नैका वा यदिदं वद ॥
तदाश्रयश्च संसारो तथैको नैक एव वा ।
साचेदेका ततः सैका शुकस्य ब्रह्मविद्यया ॥
पूर्वमेव निरस्तेति व्यर्थस्ते मुक्तये श्रमः ।
स्यान्मतं नैव ते सन्ति वामदेवशुकादयः ॥
यद्विद्यया निरस्तत्वान्नाद्याविद्येति चोद्यते ।
मुक्तामुक्तादिभेदो हि कल्पितो मदविद्यया ॥
दृश्यत्वान्मामकस्वप्न - दृश्यभेदप्रपञ्चवत् ।
यत्पुनर्ब्रह्मविद्यातस्तेषां मुक्तिरभूदिति ॥
वाक्यं तत्स्वाप्नमित्युक्तियुक्त्या प्रत्यूहतामिति ।
नन्वीदृशानुमानेन स्वाविद्यापरिकल्पितम् ॥
प्रपंचं साधयत्यन्यः कथं प्रत्युच्यते त्वया ।
त्वदविद्यानिमित्तत्वे यो हेतुस्ते विवक्षितः ॥
स एव हेतुस्तस्यापि भवेत्सर्वज्ञसिद्धिवत् ।

---

* पाठान्तरं किंचिदस्तीति

इत्यन्योऽन्यविरुद्धोक्तिव्याहते भवतां मते ॥
सुखमस्तीति यत्किंचित्प्रलपन्निव लक्ष्यसे ।
यथा च स्वाप्नमित्युक्तिसदृशी तद्विमुक्तिगीः ॥
तथैव भवतोऽपीति व्यर्थो मोक्षाय ते श्रमः ।
यथा तेषामभूतैव पुरस्तादात्मविद्यया ॥
मुक्तिभूतोच्यते तद्वत्परस्तादात्मविद्यया ।
अभाविन्येव सामर्थ्याभाविनीत्यपदिश्यताम् ॥
सन्ति च स्वप्नदृष्टानि दृष्टान्तवचनानि ते ॥
ननु नेदमनिष्टं मे यन्मुक्तिर्न भविष्यति ।
आत्मनो नित्यमुक्तत्वान्नित्यसिद्धैव सा यतः ।
तदिदं शान्तिकर्मादौ वेतालावाहनं भवेत् ॥
येनैवं सुतरां व्यर्थो ब्रह्मविद्यार्जनश्रमः ।
अविद्याप्रतिबद्धत्वादथ सा नित्यसत्यपि ॥
असतो वेति तद्व्यक्तिर्विद्याफलमुपेयते ।
हस्तस्थमेव हेमादि विस्मृतं मृग्यते यथा ॥
यथा तदेव हस्तस्थमवगम्योपशाम्यति ।
तथैव नित्यमुक्तात्मस्वरूपानवबोधतः ॥
संसारिणस्तथा भावो व्यज्यते ब्रह्मविद्यया ।
हन्त केयमभिव्यक्तिर्या विद्याफलमिष्यते ॥

स्वप्रकाशस्य चिद्धातोर्या स्वरूपपदे स्थिता ।
संवित्किं सैव किं वाऽहं ब्रह्मास्मीतीति कीदृशी ।
यदि स्वरूपसंवित्सा नित्यैवेति न तत्फलम् ॥
अथ ब्रह्माहमस्मीति संवित्तिर्व्यक्तिरिष्यते ।
ननु ते ब्रह्मविद्या सा सैव तस्याः फलं कथम् ॥
किंच सा तत्त्वमस्यादिवाक्यजन्या भवन्मते ।
उत्पत्तिमत्यनित्येति मुक्तस्यापि भयं भवेत् ॥
अपि च व्यवहारज्ञाः सति पुष्कलकारणे ।
कार्यं न जायते येन तमाहुः प्रतिबन्धकम् ॥
इह किं तद्यदुत्पत्तुमुपक्रान्तं स्वहेतुतः ॥
अविद्याप्रतिबद्धत्वादुत्पत्तिं न प्रपद्यते ।
न मुक्तिर्नित्यसिद्धत्वान्न ब्रह्माऽस्मीति धीरपि ॥
न हि ब्रह्माहमस्मीति संवित्पुष्कलकारणम् ।
संसारिणस्तदाऽस्तीति कथं सा प्रतिबध्यते ॥
यतः सा कारणाभावादिदानीं नोपजायते ।
न पुनः प्रतिबद्धत्वादस्थाने तेन तद्वचः ।
किंचंको जीव इत्येतद्वस्तुस्थित्या न युज्यते ॥
अविद्या-तत्समाश्लेष-जीवत्वादि मृषा हि ते ।
प्रातिभासिकमेकत्वं प्रतिभासपराहतम् ॥

यतो नः प्रतिभासन्ते संसरन्तः सहस्रशः ।
आसंसारसमुच्छेदं व्यवहाराश्च तत्कृताः ॥
आबाधिताः प्रतीयन्ते स्वप्नवृत्तविलक्षणाः ।
तेन यौक्तिकमेकत्वमपि युक्तिपराहतम् ।
प्रवृत्तिभेदानुमिता विरुद्धमिति वृत्तयः ॥
तत्तत्स्वात्मवदन्येऽपि देहिनोऽशक्यनिह्नवाः ।
यथाऽनुमेयाद्वह्न्यादेरनुमाना - विलक्षणाः ॥
प्रत्यक्षं ते यथाऽन्येभ्यो जीवेभ्यो न पृथक् कथम् ।
न चेच्चेष्टाविशेषेण परो बोद्धाऽनुमीयते ॥
व्यवहारोऽवलुप्येत सर्वो लौकिकवैदिकः ।
न चौपाधिकभेदेन मेयमातृविभागधोः ।
स्वशरीरेऽपि तत्प्राप्तेः शिरःपाण्यादिभेदतः ॥
तथा तत्र शिरःपाणिपादादौ वेदनोदये ।
अनुसंधानमेकत्वे तथा सर्वत्र ते भवेत् ॥
प्रायणान्नरकक्लेशात्प्रसूति - व्यसनादपि ।
चिरातिवृत्ताः प्राग्जन्मभोगा न स्मृतिगोचराः ॥
युगपज्जायमानेषु × × ×
आश्रयासङ्करस्तत्र कथमैकार्थ्यविभ्रमः ।
न च प्रातिस्विकाविद्याकल्पितस्वस्वदृश्यकैः ॥

जीवैरनेकैरप्येषा लोकयात्रोपपद्यते ।
परवार्तानभिज्ञास्ते स्वस्वस्वप्नैकदर्शिनः ॥
कथं प्रवर्तयेयुस्तां सङ्गाद्यैकनिबन्धनाम् ।
किंच स्वयंप्रकाशत्वविभुत्वैकत्वनित्यताः ॥
त्वदभ्युपेता बाधेरन् संविदस्ते द्वितीयताम् ।
संविदेव न ते धर्माः सिद्धायामपि संविदि ॥
विवाददर्शनात्तेषु तद्रूपाणां च भेदतः ।
न च ते भ्रान्तिसिद्धास्ते येनाद्वैताविरोधिनः ॥
तत्त्वावेदकवेदान्तवाक्यसिद्धा हि ते गुणाः ।
आनन्दस्वप्रकाशत्वनित्यत्व - महिमाद्यथ ॥
ब्रह्मस्वरूपमेवेष्टं तत्रापीदं विविच्यताम् ।
ब्रह्मेति यावन्निर्दिष्टं तन्मात्रं किं सुखादयः ॥
अथवा तस्य ते यद्वा त एव ब्रह्मसंज्ञिनः ।
आद्ये तत्तत्पदाम्नानवैयर्थ्यं वेदलोकयोः ॥
पूर्वोक्तनीत्या भेदश्च जगज्जन्मादिकारणम् ।
अभ्युपेत्यैव हि ब्रह्म विवादास्तेषु वादिनाम् ॥
द्वितीये सैव तैरेव ब्रह्मणः सद्वितीयता ।
तृतीये ब्रह्म भिद्येत तन्मात्रत्वात्पदेपदे ॥
तत्समूहोऽथवा ब्रह्म तरुवृन्दविनाशवत् ।

प्रकर्षश्च प्रकाशश्च भिन्नावेवार्कवर्तिनौ ।
तेन न क्वापि वाक्यार्थौ विभागोऽस्ति निदर्शनम् ॥
जाड्यदुःखाद्यपोहेन यद्येकत्रैव वर्तिता ।
ज्ञानानन्दादिशब्दानां न सतः सद्वितीयता ॥
अपोहाः किं न सन्त्येव सन्तो वा नोभयेऽपि वा ।
सत्वसत्सद्वितीयः स्याज्जडाद्यात्मकतेतरे ॥
सदसद्व्यतिरेकोक्तिः पूर्वमेव पराकृता ।
तथात्वे च घटादिभ्यो ब्रह्मापि न विशिष्यते ।
किंचापोह्य जड़त्वादि विरुद्धार्थासमर्पणे ॥
नैव तत्तदपोह्येत तदेकार्थैः पदैरिव ।
प्रतियोगिनि दृश्ये तु याऽभावान्तरमात्रधीः ॥
सैवाभाव इतीहापि सद्भिस्ते सद्वितीयता ।
भूतभौतिकभेदानां सदसद्व्यतिरेकिता ॥
कुतोऽवसीयते किन्तु प्रत्यक्षादेरुतागमात् ।
प्रत्यक्षादीनि मानानि स्वंस्वमर्थं यथायथम् ॥
व्यवच्छिन्दन्ति जायन्ते इति यावत्स्वसाक्षिकम् ।
यथाग्रतःस्थिते नीले नीलिमान्यकथा न धीः ॥
एकाकारा न हि तथा स्फटिके धवले मतिः ।
क्षीरे मधुरधीर्यादृक् नैव निम्बकषायधीः ॥

व्यवहाराश्च नियताः सर्वे लौकिकवैदिकाः।
सत्यं प्रतीतिरस्त्यस्या मूलं नास्तीति चेन्न तत् ॥
सा चेदस्ति तया मूलं कल्प्यतां कार्यभूतया।
क्लृप्तश्चेन्द्रियलिङ्गादि तद्भावानुविधानतः ॥
यौगपद्यक्रमायोगाद्व्यवच्छेद - विधानयोः।
ऐक्यायोगाश्च भेदो न प्रत्यक्ष इति यो भ्रमः ॥
भेदेतरेतराभावा द्वौवेगाग्रहणेन सः।
स्वरूपमेव भावानां प्रत्यक्षेण परिस्फुरत ॥
भेदव्याहारहेतुः स्यात्प्रतियोगिन्यपेक्षया।
यथा तन्मात्राधीर्नाना नास्तिव्याहारसाधनी ॥
ह्रस्वदीर्घत्वभेदा वा यदैकत्र षडंगुले।
एवंव्यवस्थितानेकप्रकारा - कारतवत्तया ॥
प्रत्यक्षस्य प्रपञ्चस्य तद्भावोऽशक्यनिह्नवः।
आगमः कार्यनिष्ठत्वादीदृशेऽर्थे न तु प्रमा ॥
प्रामाण्येऽप्यन्वयायोग्यपदार्थत्वान्न बोधकः।
नासत्प्रतीतेर्बाधाच्च न सदित्यपि यन्न तत् ॥
प्रतीतेरेव सत्किन्न बाधान्नासत्कुतोजगत्।
तस्मादविद्ययैवेयमविद्या भवताऽऽश्रिता ॥
किंच भेदप्रपञ्चस्य धर्मौ मिथ्यात्वलक्षणः।

मिथ्या वा परमार्थो वा नाद्यः कल्पोऽयमञ्जसा ॥
असतोऽर्थान्तरेभ्यश्च व्यवच्छिदन्ति भान्ति नः ।
तथा हीह घटोऽस्तीति येयं धीरुपजायते ॥
सा तदा तस्य नाभावं पटत्वं वाऽनुमन्यते ।
नन्वस्तीति यदुक्तं किं तन्मात्रं घट इत्यपि ॥
अर्थान्तरं वा तन्मात्रे सदद्वैतं प्रसज्यते ।
अर्थान्तरत्वे सिद्धं तत्सदसद्भ्यां विलक्षणम् ॥
यद्येवमस्ति ब्रह्मेति ब्रह्मौपनिषदं मतम् ।
घटवत्सदसत्त्वाभ्यामनिर्वाच्यं तवापतेत् ।
आनन्दसत्यज्ञानादिनिर्देशैरेव वैदिकैः ।
ब्रह्मणोऽप्यतथाभावस्त्वयैवैवं समर्थितः ॥
सदसद्व्यतिरेकोक्तिः प्रपञ्चस्य च हीयते ।
यद्यथा किंचिदुच्येत तत्सर्वस्य तथा भवेत् ॥
तस्मादस्तीति संवित्तिर्जायमाना घटादिषु ।
तत्तत्पदार्थसंस्थान - पारमार्थ्यावबोधिनी ॥
सजातीयविजातीयव्यवच्छेद - निबन्धनैः ।
स्वैः स्वैर्व्यवस्थितैरूपैः पदार्थानां तु या स्थितिः ॥
सा सत्ता न स्वतन्त्राऽन्या तत्राद्वैतकथा कथम् ।
न च नानाविधाकारप्रतीतिः शक्यनिह्नवा ॥

सर्वाण्येव प्रमाणानि स्वंस्वमर्थं यथोदितम्।
तन्मिथ्यात्वे प्रपंचस्य सत्यत्वं दुरपन्हवम्॥
पारमार्थेऽपि तेनैव तत्राद्वैतं विहन्यते॥
न वेद्यं वित्तिधर्मः स्यादिति यत्प्रागुदीरितम्।
तेनापि साधितं किंचित्संविदोऽस्ति न वा त्वया।
अस्ति चेत्पक्षबाधः स्यान्न चेत्ते विफलः श्रमः।
अतः स्वरसविस्पष्टदृष्टभेदास्तु संविदः।
यथा रथादिभिर्ग्राह्यै नैक्यं याति घटादिभिः॥
सहोपलम्भनियमो न खल्वेकैकसंविदा।
न चादस्ति ससामान्यं सर्वं संवेदनास्पदम्॥
सहोपलम्भनियमान्नान्योऽर्थः संविदो भवेत्।
यदेतदपराधीनस्वप्रकाशं तदेव हि॥
स्वयंप्रकाशताशब्दमिति वृद्धाः प्रचक्षते।
यस्मिन्नभासमाने हि यो नामार्थो न भासते॥
नासा*वर्थान्तरस्तस्मान्मिथ्येन्दुरिव चन्द्रतः।
अभासमाने विज्ञाने न चात्मर्थावभासनम्॥
इति संविद्विवर्तत्वं प्रपंचः स्फुटमंचति।

---

* न चादोऽर्थान्तरं तस्मादिति पाठः समुचितः।

मैवं परिभवः प्रत्यक्षेणाबलीयसा ॥
संरक्ष्यमाणभेदास्तेनानुमानानु - वर्तिनः ।
तथा हीदमहं वेद्मीत्यन्योन्यानात्मना स्फुटम् ॥
अयं साक्षाच्चकास्तीति सर्वेषामात्मसाक्षिकम् ।
प्रत्यक्षप्रतिपक्षं च नानुमानं प्रवर्तते ।
न हि वन्हेरनुष्णत्वं द्रव्यत्वादनुमीयते ॥
किंच हेतुर्विरुद्धोऽयं सहभावो द्वयोर्यतः —
— — — स्वात्मना सहभासते ।
नीलाद्युपप्लवापेतस्वच्छचिन्मात्र - संततिः ॥
स्वापादौ भासते नैवमर्थः संवेदनात्पृथक् ।
तेन संवेदनं सत्यं संवेद्योर्थः स्वनन्निति ॥
तदेतदपरामृष्टस्ववाग्बाधस्य जल्पितम् ।
सहोपलम्भनियमो येनैवं सति हीयते ॥
यस्मादृते यदा भाति भाति यस्मादृतेऽपि तत् ।
घटादृतेऽपि निर्भातः पटादिव घटःस्वयम् ॥
न क्वाप्यतः परमदृश्यतकोप शेष-
स्तच्छेषपूरणकृतिः परिहासहेतुः ।
ज्ञातव्यमन्यदपि तैर्निरणायि सम्य-
ग्ग्रन्थान्तरेष्विति न किंचिदिहास्त्यचिन्त्यम् ॥

*सन्तु सहाया: पूर्वाचार्याः स्वानुगतानां मादृशानां पृथग्-जनानामपि । इति भृशमभ्यर्थते स्वामि राम मिश्र शास्त्री*

---

